अनया विद्यया जप्तं ब्राह्मीपत्रं प्रभक्षयेत् ।
न विस्मरति मेधावी श्रुतान् वेदागमान् पुनः ।
बहुना किमियं विद्या जपतां कामदो मणिः ॥ १०३
तोयस्थं शयनं विष्णोः सकेवलचतुर्मुखः ।
बिन्दुर्घीशयुतो वह्निर्बिन्दुसद्योऽम्बुमान् भृगुः ॥ १०४
उक्तानि त्रीणि बीजानि सद्भिः सारस्वतार्थिनाम् ।
अङ्गानि कल्पयेद् बीजैर्द्विरुक्तैर्जातिसंयुतैः ॥ १०५

नारायणीये—

ब्राह्मीरसस्य कपिलाज्ययुतं प्रभाते जप्तं तया पिबति यश्चुलुकं त्रिवर्षम् ।
एकोदितं स खलु धारयति त्रिरुक्तं पश्चाद्वतो मुखच्युतं न तु विस्मरेत्तत् ॥
तत्पल्लवादनमपि स्मृतमेवम् । इति ।

कामदो मणिरिति । अनेनैतत् सूचितम् ।

एतज्जप्तं सुवीरजमपास्यति नेत्ररोगम् । इति ।
मूत्राशी तिथिलक्षं जप्त्वा योऽङ्घोत्नसर्पिषा जुहुयात् ।
अष्टसहस्रं वेत्ति स भूतं भव्यं भविष्यच्च । इत्यादिकम् ॥१०२॥१०३॥

मन्त्रान्तरमुद्धरति तोयस्थमिति । विष्णोः शयनमनन्त आकारः । तोयस्थं वकारस्थं तेन वा । चतुर्मुखः ककारः सकेवलः स्वररहितः तेन वाक् । अयमेव मन्त्रांश इति केचित् । तदुक्तं नारायणीये—

खङ्गीशो यः प्रांशुकः सान्तवेधाः कर्णान्तस्थो यः सदण्डी भुजङ्गः ।
साम्भो दन्तो बिन्दुमान् यो भृगुः स्युर्वागीश्वर्यास्त्रीणि बीजान्यमूनि ॥ इति ॥

तट्टीकाकारेण वागिति मन्त्रांश उक्तः । अन्ये तु चतुर्मुखः कः सकेवलः बिन्दुमान् तेन कां । एवं सबिन्दुकस्य बीजत्वमुपपद्यत इति ते वदन्ति ।

सम्प्रदायविदस्तु पूर्व्वोद्धृतं यत् वाक्पदं तल्लक्षितं वाग्भवबीजमित्याहुः । एवं बीजत्वमप्युपपन्नं सारस्वतञ्च भवति । अन्ये तु प्रकारान्तरेण वाग्भवबीजोद्धारं कुर्व्वन्ति । विष्णोस्तोयस्थं शयनम् आकारः कशब्देन शिरस्तेन अकारः इ इति स्वरूपम् । कश्च इश्चेति समासे के इति पदम् । कीदृक् शयनं सके केसहितं वलनं वलः संमेलनं तस्मिन् जाते चतुर्मुखः कः तेन शिरः । ततो बिन्दुरिति । अर्घीश ऊ वह्नी रेफः सद्य ओकारः अम्बु वकारः भृगुः सकारः । सारस्वतार्थिनामित्यनेन विनियोग उक्तः । आद्यं बीजं अन्त्यं शक्तिः पूर्व्वोक्तमृष्यादिकम् । १०५ ॥

मुक्ताहारावदातां शिरसि शशिकलालङ्कृतां बाहुभिः स्वै-
र्व्याख्यां वर्णाक्षमालां मणिमयकलशं पुस्तकञ्चोद्वहन्तीम्।
आपीनोत्तुङ्गवक्षोरुहभरविनमन्मध्यदेशामधीशां
वाचामीड़े चिराय त्रिभुवननमितां पुण्डरीके निषस्साम्॥ १०६

त्रिलक्षं प्रजपेन्मन्त्रं जुहुयात्तद्दशांशतः।
पायसेनाज्यसिक्तेन संस्कृते हव्यवाहने॥ १०७
वागीशीं पूजयेत् पीठे विधिना मातृकोदिते।
प्राक्प्रस्तुतेन मार्गेण प्रत्यहं साधकोत्तमः॥ १०८
व्याघातकुसुमैर्हुत्वा वाक्सिद्धिमतुलां लभेत्।
जातिपुष्पैः सिताम्भोजैः सिक्तैश्चन्दनवारिणा॥ १०९
नन्द्यावर्त्तैः शुभैः कुन्दैर्हुत्वा वाक्सिद्धिमाप्नुयात्।
जपन् बीजत्रयं मन्त्री सभायां जयमाप्नुयात्॥ ११०
सितां वचां वा ब्राह्मीं वा जप्तां खादेद्दिने दिने।
मेधां काममवाप्नोति साधको नात्र संशयः॥ १११
एवमुक्तेषु मन्त्रेषु दीक्षितो यतमानसः।
एवं यो भजते भक्त्या स भवेद्भुक्तिमुक्तिभाक्॥ ११२
सुसितैर्गन्धकुसुमैः पूजा सारस्वते विधौ।
दूर्व्वा बीजाङ्कुरं पुष्पं राजवृक्षसमुद्भवम्॥ ११३

मुक्तेति। व्याख्या व्याख्यानमुद्रा पूर्व्वोक्ता। दक्षोर्द्ध्वतो वामोर्द्ध्वपर्य्यन्तमायुधध्यानम्। १०६॥

विधिनेति वक्ष्यमाण श्वेतगन्धपुष्पादिना। प्राक्प्रस्तुतेनेति एकादशाचार्य्योक्तमार्गेणेत्यर्थः। साधकोत्तमः सरस्वत्युपासकसमयस्थ इत्यर्थः। व्याघातो राजवृक्षः "आरग्वधो दीर्घफलो व्याघातश्चतुरङ्गुलः" इति कोषः। नन्द्यावर्त्तैर्गन्धतगरैः। शुभैः सुगन्धिभिरिति कुन्दविशेषणम्। काममत्यर्थम्। दीक्षित इति ग्रन्थकृदुक्तप्रकारेणेत्यर्थः॥ १०७॥१०८॥१०९॥११०॥१११॥११२॥

सारस्वतसमयानाह सुसितैरिति। बीजाङ्कुरं यवाङ्कुरम्। सिन्धुवारो निर्गुण्डी।

उत्पलानि प्रशस्तानि सिन्धुवाराङ्कुराणि च।
भजन् सरस्वतीं नित्यमेतानि परिवर्जयेत् ॥ ११४
आम्रातं गृञ्जनं बिल्वं करञ्जं लशुनन्तथा।
तैलं पलाण्डुं पिण्याकं शाङ्गाष्टमपि भोजने ॥ ११५
सर्व्वं पर्य्युषितं त्याज्यं सदा सारस्वतार्थिना।
नाचरेन्निशि ताम्बूलं स्त्रियं गच्छेद्दिवा न च ॥ ११६
न सन्ध्ययोः स्वपेज्जातु नाशुचिः किञ्चिदुच्चरेत्।
प्रदोषेषु भवेन्मौनी दिग्वस्त्रां न विलोकयेत् ॥ ११७
न पुष्पितां स्त्रियं गच्छेन्न निन्देद्वामलोचनाम्।
न मृषा वचनं ब्रूयान्नाक्रामेत् पुस्तकं सुधीः ॥ ११८
अक्षराढ्यानि पत्राणि नोपेक्षेत न लङ्घयेत्।
चतुर्दश्यष्टमीपर्व्वप्रतिपद्ग्रहणेषु च ॥ ११९
संक्रमेषु च सर्व्वेषु विद्यां नैव पठेद् बुधः।
व्याख्याने सन्त्यजेन्निद्रामालस्यं जृम्भनं पुनः ॥ १२०
क्रोधं निष्ठीवनं तद्वन्नीचाङ्गस्पर्शनन्तथा।
मनुष्यसर्पमार्जारमण्डूकनकुलादयः ॥ १२१

एतानि वक्ष्यमाणानि भोजने परिवर्जयेदिति सम्बन्धः। आम्रातं अवार इति कान्यकुब्जभाषायाम्। गृञ्जनं गाजर इति प्रसिद्धम्। कलञ्जं कृष्णबीजः फलविशेषः कलिङ्गड़ इति गुर्जरभाषायां खर्बुंजा इति गौड़भाषायाम्। रोड इति कान्यकुब्जभाषायाम्। तैलं प्रत्यक्षं व्यञ्जनाद्यसम्पृक्तम्। शाङ्गाष्टं सिंघाड़ इति कान्यकुब्जभाषायाम्। साङ्गुष्ठमित्यपपाठः साङ्गुष्ठभोजनस्य विहितत्वात्। यदाहुः—

दानं प्रतिग्रहो होमो भोजनं बलिरेव च।
साङ्गुष्ठेन सदा कार्य्यमसुरेभ्योऽन्यथा भवेत् ॥ इति।

सर्व्वं पर्य्युषितं घृतपक्वमपि। नाचरेन्निशि ताम्बूलमित्यस्यायमर्थः। रात्रौ मुखे ताम्बूलं कृत्वा न शयनं कार्य्यमित्यर्थः। स्मृतिरपि—“ताम्बूलं वदनात् त्यजेत्” इति। दिग्वस्त्रां नग्नां स्वीयामपि ॥ ११३॥११४॥११५॥११६॥११७॥११८॥११९॥१२० ॥

अन्तरा यदि गच्छेयुस्तदा व्याख्यां परित्यजेत्।
निशासु दीपभ्रंशे च सद्यः पाठं परित्यजेत्॥ १२२

ज्ञात्वा दोषानिमान् सम्यक् भक्त्या यो भारतीं भजेत्।
वाचां सिद्धिमवाप्नोति वाचस्पतिरिवापरः॥ १२३

॥ श्रीँ क्लीँ॥

इति श्रीशारदातिलके सप्तमः पटलः॥

नीचाङ्गानि नाभ्यधोवर्त्तीनि। आदिशब्दात् पश्चादयः॥ १२१॥१२२॥१२३॥

इति श्रीशारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां
पदार्थादर्शाभिख्यायां सप्तमः पटलः॥ ॐ॥

---